# गायत्री मन्त्र

**ॐ भूर्भुवः स्वः**
**तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि**
**धियो यो नः प्रचोदयात्।।**

ॐ तीन लोकों का स्वामी, स्वयं प्रकाश चित्सूर्य, जो वर्णन करने योग्य है, हमें निर्मल बुद्धि दे जिससे हम कल्याण को प्राप्त हों।।

तू ने हमें उत्पन्न किया, पालन कर रहा है तू।
तुझ से ही पाते प्राण हम, दुःख और कष्ट हरता तू।

तेरा महान् तेज है, फैल रहा सभी स्थान।
सृष्टि की वस्तु-वस्तु में, हो रहा है विद्यमान।

तेरा ही धरते ध्यान हम, मांगते हैं यही दया।
ईश्वर हमारी बुद्धि को, श्रेष्ठ मार्ग पर चला।



# अनुक्रमणिका

# वैदिकशान्तिमन्त्राः

ॐ वाङ् मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम्, आविरावीर्म एधि, वेदस्य मा आणीस्थः, श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान् संदधामि, ऋतं वदिष्यामि, सत्यं वदिष्यामि, तन्मामवतु, तद्वक्तारमवतु, अवतु माम्, अवतु वक्तारम्।। ॐ शान्तिः शान्तिः शान्तिः।।

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांग्सस्तनूभिर्व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति न पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु। ॐ शान्तिः शान्तिः शान्तिः।।

ॐ आप्यायन्तु ममांगानि, वाक्प्राणश्चक्षुः श्रोत्रमथ बलमन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मौपनिषदं। माऽहं ब्रह्म निराकुर्यां, मा ब्रह्म निराकरोदनिराकरणमस्तु, अनिराकरणमेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि संतु ते मयि संतु। ॐ शान्तिः शान्तिः शान्तिः।।

ॐ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं नो इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु, अवतु माम्। अवतु वक्तारम्। ॐ शान्तिः शान्तिः शान्तिः।।

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः।।

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।।

ॐ शान्तिः शान्तिः शान्ति।।

—०—

## मंगलाचरण

ॐ ब्रह्मानन्दं परम सुखदं केवलं ज्ञानमूर्तिं
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सत्गुरुं तं नमामि।।

अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत् पदं दर्शितं येन तस्मै श्री गुरुवे नमः।।

नारायणं पद्मभवं वसिष्ठं
शक्तिं च तत्पुत्रपराशरं च।
व्यासं शुकं गौडपदं महान्तं
गोविन्दयोगीन्द्रमथास्यशिष्यम्।।

श्री शंकराचार्यमथास्य पद्म-
पादं च हस्तामलकं च शिष्यम्।
तं तोटकं वार्तिककारमऽन्यान्
अस्मद् गुरूणसन्ततमानतोऽस्मि।।

ॐ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं

वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। ॐ शान्तिः शान्तिः शान्तिः।।

ॐ सह नाववतु सह नौ भुनक्तु। सह वीर्यंकरवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः।।

—०—

## ।। पुरुषसूक्तम् ।।

ॐ सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वा। अत्यतिष्ठद्दशाङ्गुलम्। पुरुष एवेदगं सर्वम्। यद्भूतं यच्च भव्यम्। उतामृतत्वस्येशानः। यदन्नेनातिरोहति। एतावानस्य महिमा। अतो ज्यायाग्ंश्च पूरुषः।।१।।

पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि। त्रिपादूर्ध्व उदैत्पुरुषः। पादोऽस्येहाऽऽभवात्पुनः। ततो विष्वङ्व्यक्रामत्। साशनानशने अभि। तस्माद्विराडजायत। विराजो अधि पुरुषः। स जातो अत्यरिच्यत। पश्चाद्भूमिमथो पुरः।।२।।

यत्पुरुषेण हविषा। देवा यज्ञमतन्वत। वसन्तो अस्यासीदाज्यम्। ग्रीष्म इध्मश्शरद्धविः। सप्तास्यासन्परिधयः। त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वानाः। अबध्नन्पुरुषं पशुम्। तं यज्ञं बर्हिषि प्रौक्षन्। पुरुषं जातमग्रतः।।३।।

तेन देवा अयजन्त। साध्या ऋषयश्च ये। तस्माद्यज्ञात्सर्वहुतः। संभृतं पृषदाज्यम्। पशूग्स्ताग्ंश्चक्रे वायव्यान्। आरण्यान्ग्राम्यांश्च ये। तस्माद्यज्ञात्सर्वहुतः। ऋचः सामानि जज्ञिरे। छन्दाग्ंसि जज्ञिरे तस्मात्। यजुस्तस्मादजायत।।४।।

तस्मादश्वा अजायन्त। ये के चोभयादतः। गावो ह जज्ञि तस्मात्। तस्माज्जाता अजावयः। यत्पुरुषं व्यदधुः। कतिध व्यकल्पयन्। मुखं किमस्य कौ बाहू। कावूरू पादावुच्येते ब्राह्मणोऽस्य मुखमासीत्। बाहू राजन्यः कृतः।।५।।

ऊरू तदस्य यद्वैश्यः। पद्भ्याग् शूद्रो अजायत। चन्द्रमा मनसो जातः। चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत। नाभ्या आसीदन्तरिक्षम्। शीर्ष्णो द्यौः समवर्तत पद्भ्यां भूमिर्दिशः श्रोत्रात्। तथा लोकाग् अकल्पयन्।।६।।

वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसस्तुपारे। सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन्, यदास्ते। धात पुरस्ताद्यमुदाजहार। शक्रः प्रविद्वान्प्रदिशश्चतस्रः। तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते। यज्ञेन यज्ञमयजन्त देवाः। तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्ते। यत्र पूर्वे साध्याः सन्ति देवाः।।७।।

—o—

## गुरुस्तोत्रम्

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुरेव परं ब्रह्म तस्मै श्रीगुरुवे नमः।।

अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरुवे नमः।।

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरुवे नमः।।

स्थावरं जंगमं व्याप्तं येन कृत्स्नं चराचरम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरुवे नमः।।

सर्वश्रुतिशिरोरत्नसमुद्भासितमूर्तये।
वेदांतांबुजसूर्याय तस्मै श्रीगुरुवे नमः।।

चैतन्यं शाश्वतं शान्तं व्योमातीतं निरञ्जनम्।
बिन्दुनादकलातीतं तस्मै श्रीगुरुवे नमः।।

ज्ञानशक्तिसमारूढस्तत्त्वमालाविभूषितः।
भुक्तिमुक्तिप्रदाता च तस्मै श्रीगुरुवे नमः।।

अनेकजन्मसंप्राप्त कर्मेन्धनविदाहिने।
आत्मज्ञानाग्निदानेन तस्मै श्रीगुरुवे नमः।।

शोषणं भवसिंधोश्च प्रापणं सारसंपदः।
यस्य पादोदकं सम्यक् तस्मै श्रीगुरुवे नमः।।

न गुरोरधिकं तत्त्वं न गुरोरधिकं तपः।
तत्त्वज्ञानात्परं नास्ति तस्मै श्रीगुरुवे नमः।।

मन्नाथः श्रीजगन्नाथो मद्गुरुः श्रीजगद्गुरुः।
मदात्मा सर्वभूतात्मा तस्मै श्रीगुरुवे नमः।।

गुरुरादि अनादिश्च गुरुः परमदैवतम्।
गुरोः परतरं नास्ति तस्मै श्रीगुरुवे नमः।।

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि।।

# प्रातः स्मरणम्

प्रातः स्मरामि हृदि संस्फुरद् आत्म-तत्त्वम्
सत्-चित्-सुखं परमहंस-गतिं तुरीयम्।
यत् स्वप्न-जागर-सुषुप्तम् अवैति नित्यम्
तद् ब्रह्म निष्कलम् अहं न च भूतसंघः।।

प्रातर् भजामि मनसो वचसाम् अगम्यम्
वाचो विभान्ति निखिला यद् अनुग्रहेण।
यन् 'नेति नेति' वचनैर् निगमा अवोचुस्
तं देव-देवम् अजम् अच्युतम् आहुर् अगग्र्यम्।।

प्रातर् नमामि तमसः परम अर्क-वर्णम्
पूर्णं सनातन-पदं पुरुषोत्तमाख्यम्।
यस्मिन् इदं जगद् अशेषम् अशेष-मूर्तौ
रज्ज्वां भुजंगम इव प्रतिभासितं वै।।

समुद्र-वसने! देवि! पर्वत-स्तन-मण्डले!
विष्णु-पत्नि! नमस् तुभ्यम्, पादस्पर्शं क्षमस्व मे।
सरस्वति महाभागे विद्ये कमल लोचने।
विश्वरूपे विशालाक्षि विद्यां देहि नमोऽस्तुते।।

या कुन्देन्दु-तुषार-हार-धवला या शुभ्रवस्त्रावृता,
या वीणा वरदण्ड-मण्डितकरा या श्वेत-पद्मासना।
या ब्रह्माच्युत शंकर-प्रभृतिभिर् देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेष-जाड्यापहा।।

वक्र-तुण्ड! महाकाय! सूर्य-कोटि-सम-प्रभ!।
निर्विघ्नं कुरु मे देव! शुभ-कार्येषु सर्वदा।।

शान्ताकारं भुजग-शयनं पद्म-नाभं सुरेशम्
विश्वाधारं गगन-सदृशं मेघ-वर्णं शुभाङ्गम्।
लक्ष्मी-कान्तं कमल-नयनं योगिभिर् ध्यान-गम्यम्
वन्दे विष्णुं भव-भय-हरं सर्व-लोकैक-नाथम्।।

कर-चरण-कृतं वाक्-कायजं कर्मजं वा
श्रवण-नयनजं वा मानसं वाऽपराधम्।
विहितम् अविहितं वा सर्वम् एतत् क्षमस्व
जय जय करुणाब्धे! श्रीमहादेव! शम्भो!।।

न त्वहं कामये राज्यं न स्वर्गं नापुनर्भवम्।
कामये दुःख-तप्तानाम् प्राणिनाम् आर्ति-नाशनम्।।

स्वस्ति प्रजाभ्यः परिपालयन्ताम्
न्यायेन मार्गेण महीं महीशाः।
गो-ब्रह्मणेभ्यः शुभं अस्तु नित्यम्
लोकाः समस्ताः सुखिनो भवन्तु।।

नमस् ते सते ते जगत्-कारणाय
नमस् ते चिते सर्व-लोकाश्रयाय।
नमोऽद्वैत-तत्त्वाय मुक्ति-प्रदाय
नमो ब्रह्मणे व्यापिने शाश्वताय।।

त्वमेकं शरण्यं त्वमेकं वरेण्यं
त्वमेकं जगत्-पालकं स्वप्रकाशम्।
त्वमेकं जगत् कर्तृ-पातृ-प्रहर्तृ
त्वमेकं परं निश्चलं निर्विकल्पम्।।

भयानां भयं भीषणं भीषणानाम्
गतिः प्राणिनां पावनं पावनानाम्।

महोच्चैः पदानां नियन्तृ त्वमेकं
परेषां परं रक्षणं रक्षणानाम्।।

तदेकं स्मरामस्तदेकं भजाम-
स्तदेकं जगत्साक्षिरूपं नमामः।

वयं त्वां स्मरामो वयं त्वां भजामो
वयं त्वां जगत्-साक्षि-रूपं नमामः।
सद् एकं निधानं निरालंबम् ईशम्
भवाम्भोधि-पोतं शरण्यं व्रजामः।।

यं ब्रह्मा-वरुणेन्द्र-रुद्र-मरुतः स्तुन्वन्ति दिव्यै-स्तवैर्
वेदैः सांग-पद-क्रमोपनिषदैर् गायन्ति यं सामगाः।
ध्यानावस्थित-तद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः।।

—o—

## स्थितप्रज्ञलक्षणानि

अर्जुन उवाच :-

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव!।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्।।

श्री भगवान् उवाच :-

प्रजहाति यदा कामान् सर्वान् पार्थ! मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते।।

दुःखेष्वनुद्विग्न-मनाः सुखेषु विगतस्पृहः।

यः सर्वत्रानभिस्नेहस् तत् तत् प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता।।

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता।।

विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते।।

यततो ह्यपि कौन्तेय! पुरुषस्य विपश्चितः।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः।।

तानि सर्वाणि संयम्य युक्त आसीत मत्परः।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता।।

ध्यायतो विषयान् पुंसः संगस्तेषूपजायते।
संगात्संजायते कामः कामात्क्रोधोऽभिजायते।।

क्रोधाद् भवति संमोहः संमोहात् स्मृति-विभ्रमः।
स्मृति भ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति।।

राग-द्वेष-वियुक्तैस्तु विषयान् इन्द्रियैश्चरन्।
आत्मवश्यैर् विधेयात्मा प्रसादं अधिगच्छति।।

प्रसादे सर्व-दुःखानां हानिर् अस्योपजायते।
प्रसन्न-चेतसो ह्याशु बुद्धिः पर्यवतिष्ठते।।

नास्ति बुद्धिर् अयुक्तस्य न चायुक्तस्य भावना।
न चाभावयतः शान्तिर् अशान्तस्य कुतः सुखम्।।

इन्द्रियाणां हि चरतां यन्मनोनुविधीयते।
तदस्य हरति प्रज्ञां वायर् नावमिवाम्भसि।।

तस्माद् यस्य महाबाहो! निगृहीतानि सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता।।

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः।।

आपूर्यमाणं अचल-प्रतिष्ठं
समुद्रं आपः प्रविशन्ति यद्वत्।
तद्वत् कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी।।

विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः।
निर्ममो निरहंकारः स शान्तिं अधिगच्छति।।

एषा ब्राह्मी स्थितिः पार्थ! नैनां प्राप्य विमुह्यति।
स्थित्वाऽस्यां अन्तकालेऽपि ब्रह्म निर्वाणं ऋच्छति।।

—o—

## उपनिषत् पाठ

ॐ ईशावास्यं इदं सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम्।।

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
तत् त्वं पूषन्! अपावृणु सत्य-धर्माय दृष्टये।।

अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वायुयानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नम उक्तिं विधेम।।

श्रेयश्च प्रेयश्च मनुष्यं एतः
तौ संपरीत्य विविनक्ति धीरः।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते
प्रेयो मन्दो योगक्षेमाद् वृणीते।।

सर्वे वेदा यत्पदं आमनन्ति
तपांसि सर्वाणि च यद् वदन्ति।
यद् इच्छन्तो ब्रह्मचर्यं चरन्ति
तत् ते पदं संग्रहेण ब्रवीमि ॐ इत्येतत्।।

आत्मानं रथिनं विद्धि शरीरं रथ एव तु।
बुद्धिं सारथिं विद्धि मनः प्रग्रहं एव च।।

इन्द्रियाणि हयान् आहुर् विषयांस् तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर् मनीषिणः।।

विज्ञानसारथिर् यस् तु मनः प्रग्रहवान् नरः।
सोऽध्वनः पारम् आप्नोति तद् विष्णोः परम् पदम्।।

उतिष्ठत जाग्रत प्राप्य वरान् निबोधत।
क्षुरस्य धारा निशिता दुरत्यया
दुर्गं पथस् तत् कवयो वदन्ति।।

अग्निर् यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव।
एकस् तथा सर्व-भूतान्तरात्मा
रूपं रूपं प्रतिरूपो बहिश् च।।

वायुर् यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव।

एकस् तथा सर्वभूतान्तरात्मा
रूपं रूपं प्रतिरूपो बहिश् च।।

सूर्यो यथा सर्वलोकस्य चक्षुर्
न लिप्यते चाक्षुषैर् बाह्यदोषैः।
एकस् तथा सर्वभूतान्तरात्मा
न लिप्यते लोकदुःखेन बाह्यः।।

एको वशी सर्वभूतान्तरात्मा
एकं रूपं बहुधा यः करोति।
तम् आत्मस्थं येऽनुपश्यन्ति धीरास्
तेषां सुखं शाश्वतं नेतरेषाम्।।

नित्योऽनित्यानां चेतनश् चेतनानाम्
एको बहूनां यो विदधाति कामान्।
तमात्मस्थं येऽनुपश्यन्ति धीरास्
तेषां शान्तिः शाश्वती नेतरेषाम्।।

न तत्र सूर्यो भाति न चन्द्र तारकं
नेमा विद्युतो भान्ति कुतोऽयं अग्निः?
तमेव भान्तं अनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति।।

तपः श्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्षचर्यां चरन्तः।
सूर्यद्वारेण ते विरजाः प्रयान्ति
यत्रामृतः स पुरुषो ह्यव्ययात्मा।।

परीक्ष्य लोकान् कर्मचितान्
ब्राह्मणो निर्वेदं आयान् 'नास्त्यकृतः कृतेन'।

तद्विज्ञानार्थं स गुरुं एवाभिगच्छेत्
समित्-पाणिः श्रोत्रियं ब्रह्म-निष्ठम्।।

तस्मै स विद्वान् उपसन्नाय सम्यक्
प्रशान्त-चित्ताय शमान्विताय।
येनाक्षरं पुरुषं वेद सत्यं
प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।।

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यं उच्यते।
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्।।

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।

ब्रह्मैवेदं अमृतं पुरस्ताद् ब्रह्म
पश्चाद् ब्रह्म दक्षिणतश् चोत्तरेण।
अधश् चोर्ध्वं च प्रसृतं ब्रह्मैवेदं
विश्वं इदं वरिष्ठम्।।

सत्येन लभ्यस् तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्।
अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो
यं पश्यन्ति यतयः क्षीणदोषाः।।

सत्यमेव जयते नानृतं
सत्येन पन्था विततो देवयानः।
येनाक्रमन्ति ऋषयो ह्याप्तकामा
यत्र तत् सत्यस्य परमं निधानम्।।

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्
तस्यैष आत्मा विवृणुते तनूं स्वाम्।।

नायमात्मा बलहीनेन लभ्यो
न च प्रमादात् तपसो वाऽप्यलिंगात्।
एतैर् उपायैर् यतते यस्तु विद्वांस्
तस्यैष आत्मा विशते ब्रह्मधाम।।

सम्प्राप्यैनं ऋषयो ज्ञान-तृप्ताः
कृतात्मानो वीतरागाः प्रशान्ताः।
ते सर्वगं सर्वतः प्राप्य धीरा
युक्तात्मनः सर्वं एवाविशन्ति।।

वेदान्त-विज्ञान-सुनिश्चितार्थाः
संन्यास-योगाद् यतयः शुद्ध-सत्त्वाः।
ते ब्रह्म-लोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे।।

यथा नद्यः स्यन्दमानाः समुद्रे
अस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान् नामरूपाद् विमुक्तः
परात्परं पुरुषं उपैति दिव्यम्।।

स यो ह वै तत् परमं ब्रह्म वेद, ब्रह्मैव भवति
नास्याब्रह्मवित् कुले भवति।
तरति शोकं, तरति पाप्मानं
गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति।।

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणे विद्वान् न बिभेति कुतश्चन।।

एतं हि वाव न तपति 'किम् अहं साधु नाकरवम्।
किम् अहं पापं अकरवम्' इति।।

युवा स्यात् साधु युवाध्यापकः
अशिष्ठो द्रढिष्ठो बलिष्ठः।
तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्।।

बलं वाव विज्ञानाद् भूयः, अपि ह शतं विज्ञानवताम्
एको
बलवान् आकम्पयते। स यदा बली भवति अथोत्थाता

भवति, उतिष्ठन् परिचरिता भवति, परिचरन् उपसत्ता
भवति, उपसीदन् द्रष्टा भवति, श्रोता भवति, मन्ता
भवति, बोद्धा भवति, कर्ता भवति, विज्ञाता भवति।।

—o—

# शिव संगीत

## ।। श्रीशिवपञ्चाक्षरस्तोत्रम् ।।

नागेन्द्रहाराय त्रिलोचनाय
भस्मांगरागाय महेश्वराय।
नित्याय शुद्धाय निरञ्जनाय
तस्मै 'न' काराय नमः शिवाय।।

मन्दाकिनीसलिलचन्दनचर्चिताय
नन्दीश्वरप्रमथनाथमहेश्वराय।

मन्दारपुष्पबहुपुष्पसुपूजिताय
तस्मै 'म' काराय नमः शिवाय।।

शिवाय गौरीवदनाब्जवृन्द-
सूर्याय दक्षाध्वरनाशकाय।
श्रीनीलकण्ठाय वृषध्वजाय
तस्मै 'शि' काराय नमः शिवाय।।

वसिष्ठकुम्भोद्भवगौतमार्य-
मुनीन्द्रदेवार्चितशेखराय।
चन्द्रार्कवैश्वानरलोचनाय
तस्मै 'व' काराय नमः शिवाय।।

यज्ञस्वरूपाय जटाधराय
पिनाकहस्ताय सनातनाय।
दिव्याय देवाय दिगम्बराय
तस्मै 'य' काराय नमः शिवाय।।

पञ्चाक्षरमिदं पुण्यं यः पठेच्छिवसन्निधौ।
शिवलोकमवाप्नोति शिवेन सह मोदते।।

—o—

# निर्वाणषट्कम्

मनोबुद्ध्यहंकारचित्तानि नाहं
न च श्रोत्रजिह्वे न च घ्राणनेत्रे।
न च व्योमभूमी न तेजो न वायु-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम्।।

न च प्राणसंज्ञो न वै पंचवायु-
र्न वा सप्तधातुर्न वा पंचकोषाः।
न वाक्पाणिपादं न चोपस्थपायू
चिदानन्दरूपः शिवोऽहं शिवोऽहम्।।

न मे द्वेषरागौ न मे लोभमोहौ
मदो नैव मे नैव मात्सर्यभावः।
न धर्मो न चार्थो न कामो न मोक्ष-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम्।।

न पुण्यं न पापं न सौख्यं न दुःखं
न मंत्रो न तीर्थं न वेदा न यज्ञाः।
अहं भोजनं नैव भोज्यं न भोक्ता
चिदानन्दरूपः शिवोऽहं शिवोऽहम्।।

न मृत्युर्न शंका न मे जातिभेदः
पिता नैव मे नैव माता न जन्म।
न बन्धुर्न मित्रं गुरुर्नैव शिष्य-
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम्।।

अहं निर्विकल्पो निराकाररूपो
विभुत्वाच्च सर्वत्र सर्वेन्द्रियाणाम्।
सदा मे समत्वं न मुक्तिर्न बन्धः
चिदानन्दरूपः शिवोऽहं शिवोऽहम्।।

—o—

# श्री काशी-विश्वनाथ की आरती

हरि ॐ जय गंगाधर हरशिव जय गिरिजाधीश,
शिव जय गौरीनाथ।
त्वं मां पालय नित्यं २ कृपया जगदीश,
ॐ हर हर हर महादेव।।१।।

कैलासे गिरिशिखरे कल्पद्रुमविपिने शिव
कल्पद्रुमविपिने
गुंजति मधुकरपुंजे २ कुंजवने गहने।
कोकिलकूजति खेलति हंसावलिललिता,
शिव हंसावलिललिता।
रचयति कलाकलापं २ नृत्यति मुदसहिता।
ॐ हर हर हर महादेव।।२।।

तस्मिन् ललितसुदेशे शाला मणिरचिता,
शिव शाला मणिरचिता।
तन्मध्ये हरनिकटे २ गौरी मुदसहिता।
क्रीडां रचयति भूषारंजित निजमीशं,
शिव रंजितनिजमीशम्।
इन्द्रादिकसुरसेवित-ब्रह्मादिकं मुनिसेवित-
प्रणमति ते शीर्षम्।
ॐ हर हर हर महादेव।।३।।

विबुधवधूर्बहुनृत्यति हृदये मुदसहिता,
शिव हृदये मुदसहिता।
किन्नरगायनकुरुते २ सप्तस्वरसहिता।
धिनकत थै थै धिनकत मृदंग वादयते,

शिव मृदंगवादयते।
क्वण क्वण ललिता वेणुं २ मधुरं नादयते।
ॐ हर हर हर महादेव।।४।।

रुण रुण चरणे रचयति नूपुरमुज्जवलितं
शिव नूपुरमुज्ज्वलितम्।
चक्रावर्ते भ्रमयति २ कुरुते तां धिकतां।
तां तां लुपचुपतालं तालं नादयते, शिव डमरूवादयते।
अंगुष्ठांगुलिनादं २ लास्यकतां कुरुते।
ॐ हर हर हर महादेव।।५।।

कर्पूरद्युतिगौरं पंचाननसहितं, शिव पंचाननसहितम्।
त्रिनयनशशिधरमौलिं २ विषधरकण्ठयुतम्।
सुन्दरजटाकलापं पावकयुतभालं,
शिव पावकयुतभालम्।
डमरुत्रिशूलपिनाकं २ करधृतनृकपालम्।
ॐ हर हर हर महादेव।।६।।

शंखनिनादं कृत्वा झल्लरि नादयते,
शिव झल्लरि नादयते।
नीराजयते ब्रह्मा नीराजयते विष्णुर्वेद ॠचां पठते।
इति मृदुचरणसरोजं हृदि कमले धृत्वा,
शिव हृदि कमले धृत्वा।
अवलोकयति महेशं, शिवलोकयतिसुरेशं ईशमभिनत्वा।
ॐ हर हर हर महादेव।।७।।

रुण्डै रचयति मालां पन्नगमुपवीतं, शिव
पन्नगमुपवीतम्।

वामविभागे गिरिजा, वामविभागे गौरी,
रूपं ह्यतिललितम्।
सुन्दरसकलशरीरे मनसिजकृतभस्माभरणं
शिवकृतभस्माभरणम्।
इति वृषभध्वजरूपं, हर शिवशंकररूपं,
तापत्रयहरणम्।
ॐ हर हर हर महादेव।।८।।

ध्यानं आरतिसमये हृदये-इतिकृत्वा, शिव हृदये
इतिकृत्वा।
रामं त्रिजटानाथं, शम्भो हर त्रिजटानाथं, ईशं
अभिनत्वा।
संगीतमेवं प्रतिदिनपठनं यः कुरुते, शिवपठनं यः
कुरुते।
शिवसायुज्यं गच्छति, हरसायुज्यं गच्छति, भक्त्या यः
शृणुते।
ॐ हर हर हर महादेव।।९।।

ॐ जय गंगाधर हर शिव जय गिरिजाधीश
शिव जय गौरीनाथ।
त्वं मां पालय नित्यं त्वं मां पालय शम्भो, कृपया
जगदीश।
ॐ हर हर हर महादेव।।१०।।

—०—

# बंगला भजन

## ( वसन्त-तीव्रा )

डमरू हर करे बाजे बाजे,
त्रिशूल धर-अंग भस्म-भूषण, व्याल माला गले विराजे।
पंचवदन पिनाक-धर शिव, वृषभ-वाहन भूतनाथ,
रुण्ड-मुण्ड गले विराजित अजर अमर दिगम्बर राजे।।

—o—

## ( दरबारी कानड़ा-चौताल )

हर हर हर भूतनाथ पशुपति,
योगीश्वर महादेव शिव पिनाकपाणि।
ऊर्ध्व जलत जटा-जाल, नाचत व्योमकेश भाल,
सप्त-भुवन धरत ताल, टलमल अवनी।।

—o—

## ( कर्णाटी-एकताल )

ताथैया ताथैया नाचे भोला, बम् बब बाजे गाल।
डिमि डिमि डिमि डमरू बाजे, दुलिछे कपाल माल।।

गरजे गंगा जटा माझे, उगरे अनल त्रिशूल राजे
धक् धक् धक् मौलिबन्ध ज्वले शशांक भाल।।

—o—

तुंहि जगत गुरु तुंहि परमेश्वर,
आदि अनादि पिनाकधर शंकर।
तुंहि भरण-पोषण कर सबको तारण,
सृजन प्रलय तुमसे होये विश्वेश्वर।।

भाल चंद रुण्ड माल शोभित,
वृषभ वाहन और जग अघ हर।
जटाजूट मांझ गंगा विराजित
धन्य धन्य महादेव तुंहि योगेश्वर।।

—०—

# कश्मीरी भजन

## लीला अमरनाथच

—महाकवि परमानन्द

१. मन थिर कर पूज़ुन प्रभू
मंतर पर शिव-शम्भू

२. दीह गोफि सत-च्यथ आनन्द लिंग
मन पीठस प्यठ ब्यूठ निसंग
लूख दप्यतनस कैलास श्रंग —मन०

३. कन थव सरस्वती छय वनन
वन्य वन्य पान छुयना सनन
नाम रूप वनि भ्योन भ्योन वनन —मन०

४. लीला यि छय अमरनाथचिय
दीह-दार सान ईकान्तचिय
शम-दम गोफ प्रशान्तचिय —मन०

५. 'त्राहि माम' पर यात्रा च कर
हर-म्वख पननुय पान वर
गोफि मेन यि गुफ छे बराबर —मन०

६. गोड गणपतयारुक गणीश
दूर मो ज़ान रूज़िथ चॆ निश
मूलाधार द्वारुक महीश —मन०

७. ब्रह्मा युस सृष्टि करतार
स्वाधिष्ठान शुराहयार
षठ्दल शन्मुख ज़न कुमार —मन०

८. शिवपोरि फेर कुण्डलने
फेर वज्र प्राण तत ज़ल कने
सथ समुदुर सनि वोगने —मन०

९. अष्टदल सु द्राव पम्पोष डल
यूर्य फेर नोरकुन मो चॆ डल
व्यच़ार अछ़ त संसार च़ल —मन०

१०. ह्यूर ह्यूर पख न्यूर न्यून वात
दूर प्योमुत छुक कव वशात्?
गथ प्रावनच बोज़ कथ त बाथ —मन०

११. तीर्थ रोस्त मा कुनि कांह पोदा
वेदन ति ॐकार विन पदा
ज़ीवन मुक्त परमात्मा —मन०

१२. नाभिदीशि दशदल संगमस
यम्य चाऽव्य लूख सत्संग मस
कृष्णास स्थावर-ज़ंगमस —मन०

१३. अंद्य अंद्य फेर चक्रबर सय
प्रदिक्षण कर च़ मन्दर सय
दीव पूज़ श्याम सोन्दर सय —मन०

१४. मन्दर मुछ त वुछ त च़न्द्रयार
सांपनिय तति हर च़न्द्रयार
विजयेश्वरी ज़न्म ज़न्म पार —मन०

१५. कऽज त्रऽविथ वात थऽजवोर
लऽज तति शिव जटा च्वपोर
अनाहत मण्डलस थाव खोर —मन०

१६. छ्यफ छुड ह्यथ वात छोण्डबल
विशुद्ध च़क्रच ज़ीव थल
दीव-पूज़ कर ज़ीव-भाव च़ल —मन०

१७. मंज्य वात खिलनस त खेलनस
पानय ज़ि पानस मेलनस
तील ज़न तेलस तेलनस —मन०

१८. वातखय वति वति वीरसिरन
तति छिय न वातान वीर सिरन
वर्ज वाव सऽत्य बलवीर इरन —मन०

१९. पुशराव पान परमेश्वरस
प्रदिक्षण कर तत मन्दरस
*वऽतिथ* रोज़ मामलीश्वरस —मन०

२०. मन निश दूर कर लय व्यक्षीप
नऽविथ गणीशस सऽर्य लीप
चलनय त सुय गव रत्नदीप —मन०

२१. भर्ग तीर्थ प्यठ छुय स्वर्गद्वार
वर्ग निश मशिरिथ मो च़ प्रार
भाव अर्घ-पुष्प पूज़ा छे सार —मन०

२२. रेन्ज़ल त्रऽविथ रीन्य्य पल
वऽतिथ निशानस मो च़ डल
कर्मस त धर्मस सूर फल —मन०

२३. कण्ठ दीश युस च्वदाह भवन
नील गंगि प्यठ बोज़ वावजन
तति तोर पवनय ओत दवन —मन०

२४. मन्ज़िल छु मंज्य मंज्य वारयाह
छ़ोट वनुन मोट बोज़ वारयाह
अक्रिया द्वारच यिय क्रिया —मन०

२५. लऽज़िम छु यिय यिय तिय वनव
नन वऽर्य वातव कोर वनव
थकि युस त दपि पगाह वनव —मन०

२६. ईश-दीश उत्तम शीषनाग
ह्यकखय त तत्य द्यन-राथ ज़ाग
राग त्राव प्राव महा वैराग —मन०

२७. त्याग पंच़कृत पंच़तरंग
सत-समुद्रकिय च्यथ-तरंग
पद्म-नाभस छिम यिम ति रंग —मन०

२८. खस्त अस्त अस्त पंच़ालसय
सोऽहं भैरव-बालसय
टख युथ न लगि अति लालसय —मन०

२९. ज़िन्द रोज बोज ज़िन्दय मरुन
गर्भ-यात्रायि अपोर तरुन
सतिये छु ततिये शिव वरुन —मन०

३०. शोज़रिथ संकल्प निशि मन
रशि-राग रोस्त काल-दीश मन
शिहलिथ ईश अनीश मन —मन०

३१. छिय परा त पश्यन्ती पशन
मध्यमा त वैखरी मा पशन
यिछ़ अवस्था द्वे तप-ऋषन —मन०

३२. युस छु परमात्मा त वटकनाथ
यस छिय भैरव विताल साथ
यम्य कऽरख स्वयंवर वशात् —मन०

३३. भाव अमरावतिये च़ नाव
मल बभूत छल गृहस्थ भाव
शिव-पादन पान पुशिराव —मन०

३४. रूदमुत गुफि युस शुद्ध त बुद्ध
नव निध अधीन तस त अष्टसिद्ध
आकाशवत् केंह न घट त बड —मन०

५. नंग मोत हंग तय मंग रोज़
ईश्वर दर्शन शब्द बोज़
लय कर त ध्यान दयि घर सोज —मन०

३६. गुफि मंज गुफि वात पनञे
त्राव दीवियि त दिवता अन्ये
छ्यनि छन यिम बभूत कञे —मन०

३७. कनि मंज लाल सुय मञि मंज़
छनिरुक छोञ छोञ रुनि मंज
तप कर दीह अरण्य मंज —मन०

३८. सोऽहम्-शब्द प्रयम प्रणवय
आज्ञा शिखरस त्राव रवय
तालव कपूत आलवय —मन०

३९. सहस्त्रदल लयगत च़ प्राव
ब्रह्मरंध्रस छु निष्कल स्वभाव
दम चे दमाले कर त क्राव —मन०

४०. पकवञ छि द्वारस मथ मथान
थान गव ज़ि यति बिहान वोथान
समाधि मंज़ युथ ह्यूव्युथान —मन०

४१. पननुय पान पानस च़मुन
यिय च़मुन तिय समुन तिय शमुन
अऽत्य वुहुन लोलनार अऽत्य हमुन —मन०

४२. युथ थान छुन प्रोवमुत यमन
तिमवय ज़ोन ब्रून्ठ्य आव यिमन
परमात्मा परज़ऽनिथ यि मन —मन०

४३. जिसमें जोगी आ पडा
जाग्रत स्वप्नय पिंगला इडा
उतरा वहां कोई ना चढा —मन०

४४. भंवरा कमल में जब वडा
अभिनासी नाही सब कडा
और था कोई ना बडा —मन०

४५. तति फोरुवुन अनाहत नाद
स्वप्न-अन्त त सुषुप्तायि आद
तुर्या त तुर्यातीति समाध —मन०

४६. फीरिथ इडायि किन्य संगमस
रस पूणमय खोतमुत त वस
तति श्राद करुन छुय यस ब तस —मन०

४७. गोफ चल च़ त्रऽविथ तस शिवस
यस रोस्त छु न कांछा चितस
पान पुशिरावुन छुय च्य तस —मन०

४८. शिव शिव ध्यान निश मो च़ डल
च़म छय प्रकृत पुरुषस म वल
कोर यि चित्रकार मायायि छल —मन०

४९. यव किञ शिव ज़ानख च्वपऽर्य
रोज़नय न केंह पापऽञ भार्य
भवसर च़े सार छुय शिव-तार —मन०

५०. युन गछुन छुय चिन्मात्रा
ज्ञानियस यिय वुछुन यात्रा
पननी छे वननी वारता —मन०

५१. तृप्त नव द्वार वात नव दल
वऽतिथ च़लिय ज़न्मच वदल
दीह यात्रा गयि यिय सफल —मन०

५२. दीह छुय वोनमुत दीवद्वार
संसार जंगलुक देवदार
दान कर दान ज़ान दीह उधार —मन०

५३. फेरुन छुयन अद त्रिभुवनस
वऽतिथ तत् विष्णु-भुवनस
यमलस त कमलस त भवनस —मन०

५४. वुज़नस छु ज़ल निर्मल उजल
नित्य-नेम वस भवानि-बल
वुधि-मन वाति भवानि-बल —मन०

५५. भर्ग पाद पूज़ संसर्ग नेर
चमकिय स्वप्रकाशिय अनेर
च़लनय ज़न्म-ज़न्मक्य बखेर —मन०

५६. भर्ग रूप नव दुर्गा च़ मान
स्वर्गलूकक्य छिय तस्य नमान
इष्ट दीवी छे पननी प्रमाण —मन०

५७. देवी सु पारवती सती
मऽज्य यस वोनुख मीनावती
शिव तस वरणिय आव ततिय —मन०

५८. ही देवी म्य दया करुम
हर हर हर शाप पाप हरुम
कर्मफल वुछनय वुञ वरुम् —मन०

५९. शिव-शक्त अख त नामरूप ब्योन
पान बोज़ मानि क्याह नोन वनुन

परमानन्द पानस बनुन
मन थिर कर पूज़ुन प्रभू।।

—o—

म्वक्त कनि तारख छिस तापदानस
छम ईशानस पोशि-पूज़ाह।।

आकाशि पोशि-वर्षुन हनि-हनि छुस
रथबान कनि छुस सूर्य देवता।
सायबान बन्योमुत छुस आसमानस।। छम०

ड्यकस प्यठ चन्द्रम प्रज़लान लाल छुस
वाव-लूकपाल छुस करान गजिगाह।
ब्रह्मा त विष्ण छिस सऽत्य ज़ंपानस।। छम०

चित्रग्वपथ ताह छुस करान सामानस
इन्द्राज़ म्वरछल-बरदार छुस।
धर्मराज़ थोवमुत प्यठ धर्म-दानस।। छम०

सत-ऋषि सथ ज़ल ह्यथ मन्ज़ बानस
अतर कोफूर छ्यकान छिस।
सतवय ग्रहदि छिस ह्यथ विमानस।। छम०

गंगासागर ह्यथ छस गंगा
वुद ज़ालान छस दीपमाला।
लक्ष्मी मीठ्य छ्यस दिवान दामानस।। छम०

नाबद आपरान महाविद्या छस
करान जमुना छस वावजि वाव।
द्वद मऽज्य सरस्वती छस पानस।। छम०

ज़ंगि थाल अनवन्य छस पान सिद्धा
व्यूग लेखान छस कर्मलेखा।
आत्मरूप बसवुन छु मनकिस थानस।। छम०

वासुक त शेषनाग शेरि बरदार छिस
रत्नन हुन्द मुक्त-हार छुस नऽल्य।
घट च्ज्य गाश आव सारिसय जहानस।। छम०

कुवीर जी त वरुण छिस खरच-बरदारय
सोर स्वर्गद्वारय सऽत्य सऽत्य ह्यथ।
रथ छिख गंडिमत्य मंज़ मैदानस।। छम०

ड्यकस ष्यट चन्दन ट्योक छुस तीज़वानस
बुथिस छुस क्वरोर सूर्युक तीज़।
छस दया गुल्य गंडिथ तस दयावानस।। छम०

अर्घ कर मनस त पोश कर प्राणस
कृष्ण पूज़ायि लाग सन्निधानस।
ज़ालिय पाफ गालिय अज्ञानस
सोय छि भगवानस पोश-पूज़ा।।

—०—

ब्यल तय मादल व्यन गुलाब पंपोश दस्तय
पूज़ायि लागय परमशिवस शिवनाथस तय।।

जटामुकुट जट-गंगा वसान छस तय
दीवियि-देवता विष्णु ब्रह्मा छिस दस-बस्तय
भक्तियि-भाव जय जयकार अऽसिन तस तय।।
पूजाय०

दयासागर लोल-विज़याय करनस मस तय
हा पोशमत्यो! होश वल मनि थव ध्यान ह्यस तय
असोर संसार छलरावान सोर रोज़ि कस तय।।
पूज़ायि०

पऽत्य-पऽत्य लगहाय शिव-शंकर शिबनावस तय
दर्शन च्यान्युक छु म्य यछ़ लोल यच़ हावस तय
टोठतम शिवजी ज़गत् ईश्वर छुस बेकस तय।। पूजा०

पंपोश पादव सऽत्य यितम अस्तय अस्तय
च़रनन वन्दय ज़ुव त जान ह्यथ बलिंजि वस तय
यिन चानि सऽतिन पोञ वुज़्यम नागरादस तय।।
पूजा०

अमरनाथस नीलकण्ठस शेरि लागस तय
दयायि सऽतिन कृष्णस प्यठ आर यियितन तस तय
तवय कृष्णो अर्पण गछ़ शिवनावस तय
पूज़ायि लागस परमशिवस शिवनाथस तय।।

—o—

शिवनाथ आनन्द अमर्यथ चावतम
सत्गुरु हावतम गटि-मंज़ गाश।।

यति छुख छ़रथ कथ बो मकानस
गोमुत छुस अज्ञानस मंज़
ओन छुस ज़ऽञ हंज़ वथ वुछनावतम।। सत्गुरु०

वोलनस संसारचि मायायि
मोकलय चानिथ वोपाय सऽत्य

दयायि हंज़य नज़राह त्रावतम।। सत्गुरु०

छुय काम-क्रूध-लूभ-मुह-अन्धकारय
ममताय सऽत्य व्यस्तार म्योन
समतायि सऽत्य यमि मंज़ मोकलावतम।। सत्गुरु०

सन्तोष व्यच़ार सत्संग धर्मय
खटनय आयम क्वकर्मय सऽत्य
अनिच्छायि परम-गथ प्रावनावतम।। सत्गुरु०

अन्दरय युस छुम आनन्द-मन्दरय
तथ्य मन्ज़ करयो यूग-पूज़ा
वोपनिषदन हन्द्य सिर म्यति बावतम।। सत्गुरु०

लोकचार अन्द्य गोम घरके क्षूभय
जवान छुस रक्षतम लूभय-निश
बुजर छु नज़दीख मत मन्दछावतम।। सत्गुरु०

ब्रह्मण ज़न्म दिथ मत मन्दछावतम
नब-प्यठ बोन मत दावतम दब
अमरनाथो अमर बनावतम।। सत्गुरु०

दासन हुन्द दासाह गन्ज़रावतम
मत मशरावतम पनञ ज़ान
यति छुख पानय तोत वातनावतम।। सत्गुरु०

अज़पा-ज़प यज्ञ ज्योत प्रज़लावतम
होत-शेष ज़न मच़रावतम मे
हे महेश दीश दीश मत दशरावतम।। सत्गुरु०

सथ-च्यथ-आनन्द अमर्यथ चावतम
न्यथ भासनावतम सोऽहं-सो
ॐ शिव शम्भू शब्द शमरावतम।। सत्गुरु०

मन-नागस प्रेम-पोञ वुज़नावतम
सुलि वुज़नावतम त हावतम रूप
मंज़ प्रभातस सातस म सावतम।। सत्गुरु०

मोह-मायायि सऽत्य मत तम्बलावतम
सतचिय कथ पावनावतम याद
च्यतकुय चे़नुन न्यथ चे़ननावतम।। सत्गुरु०

सतकि निर्णय पय पकनावतम
दय पननिय नयि हावतम वथ
नाव छुस कृष्ण शिव-भाव वडरावतम
स्वदि वानिनि पऽठ्य हावतम रूप।। सत्गुरु०

वोपदीश सऽतिन वुछथय त्रावतम
सऽत्य मा आस्यम कुनि केंह लीफ
ब्रह्मानन्दसय प्यठ वार थावतम।। सत्गुरु०

ध्यानच नदियाह निर्मल करिथय
योग-पानि सऽत्यन बरिथय छह
बय तन नावय च़्य मन नावतम।। सत्गुरु०

ज़ानकि न्यथरय वार मुच़रावतम
पंपोश ज़न फोलरावतम मन
अद्वैत-भाव सऽत्य पानस छावतम।। सत्गुरु०

मूल-तल ओसुस निर्मल पोन्युय
व्यवहार प्रक्रच़ कोरनम यख
निर्णय गर्मिय सऽत्य व्यगलावतम।। सत्गुरु०

नाव छुम कृष्ण छम चऽनिय आशय
हावतम सत् चित्त आकाशय
संसारस मंज़ पुश मत पावतम
सत्गुरु हावतम गटि मंज़ गाश।।

—o—

सन्यासय हा गोसाने
कुनि कने यिखना वने।।

जटि मन्ज़ छय गंगा जारी
ज़न छि वसान अमृत धारी।
सूर-भस्मा वलिथ छु तने।। कुनि०

ड्यकस प्यठ छिय यिम त्र्य न्यथरय
शूभवञ छिय पम्पोश वथरय
वासुक नाग छुय योनि कने।। कुनि०

जाय च्य रटथम शिन्याशयन
छोप छायि ह्यथ रूदुख नयन
सर्वव्यापक छुख हनि हने।। कुनि०

खास वृषभा छुय वाहने
सऽर करान छुख त्रिभुवने
छय च़्य उमा खोहवुरि कञे।। कुनि०

पान म्यान्यो मो नाज़ तने
काल वृथ यथ सूर बने
शिव च़ गारुन मंज़बाग मने।। कुनि०

अऽर्तिस कास्तम अऽर्चरय
गट कास्तम अमरीश्वरय
मोख च़ हावतम हरमोख कने।। कुनि०

—o—

## शिव शंकर

मन स्थिर कर मन्तर पर—
शिव—शंकर शम्भो!

मन शु'द बनि साक्षात् ननि-
हनि हनि गटि मंज़ गाश
सुविच़ार ब्ययि श्रद्धायि पर—शिव०

प्रभातस अछ़ मन्दिरस
गंग-ज़ल तन नाविथ
ध्यान-धारणायि मनि मंज सुर—शिव०

शिवनाथस गोंड दि अशि-ज़ल
शेरि लागुस भाव पोष
मन-प्राण वार, तुता कर—शिव०

इन्द्रिय नैवेद्य सोम्बराव
मन-त्रामरि मन्ज़ थाव,
देह-दीप ज़ा'लिथ वार, पर—शिव०

वासनायि धूप थव दज़वुन
विज़ान-दीप प्रज़्वुन
व्यज़-पूर्वक व्यज़ना कर-शिव०

सहस्त्रदल 'कमल' फोलराव
शिव-अनुग्रह यिथ प्राव,
शिव नित सु'र च़लि ज़्य़ त, मर,-शिव०

—०—

# मातृ संगीत

## श्रीमहिषासुरमर्दिनी स्तोत्रम्

अयि गिरिनन्दिनि नन्दितमेदिनि विश्वविनोदिनि नन्दनुते
गिरिवरविन्ध्यशिरोऽधिनिवासिनि विष्णुविलासिनि जिष्णुनुते।
भगवति हे शितिकण्ठकुटुम्बिनि भूरिकुटुम्बिनि भूरिकृते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१।।

सुरवरवर्षिणि दुर्धरधर्षिणि दुर्मुखमर्षिणि हर्षरते
त्रिभुवनपोषिणि शंकरतोषिणि किल्बिषमोषिणि घोषरते।
दनुजनिरोषिणि दितिसुतरोषिणि दुर्मदशोषिणि सिन्धुसुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।२।।

अयि जगदम्ब मदम्ब कदम्बवनप्रियवासिनि हासरते
शिखरिशिरोमणि तुङ्गहिमालय शृङ्गनिजालय मध्यगते।
मधु मधुरे मधुकैटभगंजिनि कैटभभंजिनि रासरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।३।।

अयि शतखण्ड विखंडितरुण्ड वितुंडितशुंडगजाधिपते
रिपुगजगंड विदारणचंड पराक्रमशुण्ड मृगाधिपते।
निजभुजदण्ड निपातितखंड विपातितमुंड भटाधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।४।।

अयि रणदुर्मद शत्रुवधोदित दुर्धरनिर्जर शक्तिभृते
चतुरविचार धुरीण महाशिवदूतकृत प्रमथाधिपते।
दुरितदुरीह दुराशयदुर्मति दानवदूतकृतान्तमते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।५।।

अयि शरणागत वैरिवधूवर वीरवराभयदायकरे
त्रिभुवन मस्तक शूलविरोधि शिरोऽधिकृतामल शूलकरे।
दुमिदुमितामर दुंदुभिनाद महो मुखरीकृत तिग्मकरे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।६।।

अयि निजहुंकृतिमात्र निराकृत धूम्रविलोचन धूम्रशते
समरविशोषित शोणितबीज समुद्भवशोणित बीजतले।
शिव शिव शुम्भ निशुम्भमहाहव तर्पित भूत पिशाचरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।७।।

धनुरनुसंग रणक्षणसंग परिस्फुरदंग नटत्कटके
कनक पिशंगपृषत्कनिषंगरसद्भटश्रृंग हताबटुके।
कृतचतुरंग बलक्षितिरंग घटद्बहुरंग रटद्बटुके
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।८।।

जय जय जप्यजये जय शब्दपरस्तुति तत्पर विश्वनुते
झण झणझिंझिमि झिंकृतनूपुर शिंजितमोहित भूतपते।
नटितनटार्ध नटीनटनायक नाटितनाट्य सुगानरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।९।।

अयि सुमनः सुमनः सुमनः सुमनः सुमनोहर कान्तियुते
श्रितरजनी रजनी रजनी रजनी रजनीकर वक्त्रवृते।
सुनयनविभ्रमर भ्रमर भ्रमर भ्रमर भ्रमराधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१०।।

महितमहाहव वल्लभतल्लिक वल्लितरल्लितभल्लिरते
विरचितवल्लिक पल्लिकमल्लिक झिल्लिकभिल्लिक वर्गवृते।
श्रुतकृतफुल्ल समुल्लसितारुणतल्लजपल्लव सल्ललिते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।११।।

अविरलगण्डगलन्मदमेदुर मत्तमतंगज राजपते
त्रिभुवनभूषण भूतकलानिधि रूपपयोनिधि राजसुते।
अयि सुदतीजन लालसमानस मोहनमन्मथ राजसुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१२।।

कमलदलामल कोमलकान्ति कलाकलितामल भाललते
सकलविलास कलानिलयक्रम केलिचलत्कल हंसकुले।
अलिकुलसंकुल कुवलय मण्डल मौलिमिलद्बकुलालिकुले
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१३।।

करमुरलीरववीजितकूजित लज्जितकोकिल मंजुमते
मिलितपुलिंद मनोहरगुंजित रंजितशैल निकुंजगते।
निजगुणभूत महाशबरीगण रङ्गणसम्भृतकेलिरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१४।।

कटितटपीत दुकूलविचित्र मयूखतिरस्कृत चन्द्ररुचे
प्रणतसुरासुर मौलिमणिस्फुरदंशुलसन्नख चन्द्ररुचे।
जितकनकाचल मौलिपदोर्जित निर्भरकुंजर कुम्भकुचे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१५।।

विजितसहस्त्रकरैक सहस्त्रकरैक सहस्त्रकरैकनुते
कृतसुरतारक संगरतारक संगरतारक सूनुसुते।
सुरथसमाधि समानसमाधि समाधिसमाधि सुजातरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१६।।

पदकमलं करुणानिलये वरिवस्यति योऽनुदिनं सुशिवे
अयि कमले कमलानिलये कमलानिलयः स कथं न भवेत्।
तव पदमेव परंपदमिव नुशीलयतो मम किं न शिवे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१७।।

कनकलसत्कल शीकजलैरनुषिञ्चितितेऽङ्गणरङ्गभुवं
भजति स किं न शचीकुचकुंभ तटीपरिरंभ सुखानुभवम्।
तव चरणं शरणं करवाणि मृडानि सदा मयि देहि शिवं
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१८।।

तव विमलेन्दुकुलं वदनेन्दुमलं सकलं ननु कूलयते
किमु पुरुहूतपुरीन्दुमुखी सुमुखीभिरसौ विमुखीक्रियते।
मम तु मतं शिवनामधने भवति कृपया किमु न क्रियते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१९।।

अयि मयि दीनदयालुतया कृपयैव त्वया भवितव्यमुमे
अयि जगतो जननी कृपयासि यथासि तथाऽनुमितासिरते।
यदुचित्तमत्र भवत्युररी कुरुतादुरुतापमपाकुरुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।२०।।

—०—

## श्री दुर्गा जी

जगजननी जय! जय!! माँ! जगजननी जय! जय!!
भयहारिणि, भवतारिणि, भवभामिनि जय जय।।०।।

तू ही सत्-चित्-सुखमय शुद्ध ब्रह्म-रूपा।
सत्य सनातन सुन्दर पर-शिव सुर-भूपा।।१।।

आदि अनादि अनामय अविचल अविनाशी।
अमल अनन्त अगोचर अज आनन्दराशी।।२।।

अविकारी, अघहारी, अकल, कलाधारी।
कर्ता विधि, भर्ता हरि, हर संहारकारी।।३।।

तू विधिवधू, रमा, तू उमा, महामाया।
मूल प्रकृति, विद्या तू, तू जननी, जाया।।४।।

राम कृष्ण तू, सीता, व्रजरानी राधा।
तू वाञ्छाकल्पद्रुम, हारिणि सब बाधा।।५।।

दश विद्या, नव-दुर्गा, नाना शस्त्रकरा।
अष्टमातृका, योगिनी, नव-नव-रूप-धरा।।६।।

तू परधामनिवासिनि, महाविलासिनि तू।
तू ही श्मशानविहारिणि, ताण्डव-लासिनि तू।।७।।

सुर-मुनि-मोहिनि सौम्या तू शोभाधारा।
विवसन विकट-सरूपा, प्रलयमयी धारा।।८।।

तू ही स्नेहसुधामयि, तू अति गरलमना।
रत्नविभूषित तू ही, तू ही अस्थि-तना।।९।।

मूलाधारनिवासिनि, इह-पर-सिद्धिप्रदे।
कालातीता काली, कमला तू वरदे।।१०।।

शक्ति शक्तिधर तू ही, नित्य अभेदमयी।
भेदप्रदर्शिनि वाणी विमले! वेदत्रयी।।११।।

हम अति दीन दुखी माँ विपत-जाल घेरे।
हैं कपूत अति कपटी, पर बालक तेरे।।१२।।

निज स्वभाववश जननी! दयादृष्टि कीजै।
करुणा कर करुणामयि, चरण-शरण दीजै।।१३।।

—०—

## कश्मीरी भजन

ॐ श्रीमत् ही भवऽनी छ्यम म्य आशा चऽनी
क्षणसय मंज़ दुःख त संकट दूर करतय सऽनी।

छख च़ अरदाह भुज़ भवऽनी छख सहस प्यठ च़य सवार
अन्द्य अन्द्य च्य देवता सऽरी छिय करान च्यय ज़ारपार
अष्टसिद्धि अऽधीन छय पाद चऽन्य न्यथ छलऽनी।।०।।

सिरिय तय ब्यियि च़न्द्रम छुय प्रारान च्यय हुकमस
कर मऽज्य भबऽज करि आज्ञा प्रकाश बनि ज़गतस
चानि प्रकाशि किन्य छु सन्तुष्ट त्रिभुवन रोज़ऽनी।।०।।

यलि इन्द्राज़ ब्ययि दीव अन्य तंग महिषासुरनय
इन्द्राज़ आव च्यय शरणय पादन च्य प्योय परनय
पत पत तस देवता आयि फ्रककहत्य त दोरऽनी।।०।।

भूज़िथ तिहुन्द हाल अहवाल अद महिषासुर च्यय
वातनोवथन पाताल त्यलि ज़ीर दिच़थस खुर सऽत्य

मोकलऽविथख भय निशि दीव करथक
मेहरबानी।।०।।

ॐ शब्द छख सर्वशक्तिमान महामाया च़्यय वनान
काम क्रोध लोभ ब्ययि अन्धकार भख्त्यन छख च़
कासान
चऽनी भख्त्य शिवशक्तिरूप ध्यान चोन धारऽनी।।०।।

बोज़ान छख विनती च़य यति चोनुय छु दरबार
चानि हुक्म सऽत्य सारि ज़गतुक छु चलान अद
कारबार
अस्यति आमत्य अर्ज़ करने दोरान त लारऽनी।।०।।

मऽञ्य बोज़तम छय म्य हाजथ अख भक्ती चऽनिय
घरि घरि रोज़तम च़ सन्मोख हृदयस मंज़ भवऽनी
सरस्वती हुन्द प्रसाद युथ म्य बनि नेर्यम अमृत
वऽणी।।०।।

—०—

पादि कमलन तल ब आसय, करनि चऽनिय अस्तुती
मोक्ष दिम बोड वर म्य दिम माज्य भर्ग-शाखा
भगवती।

गोम न्यत्रन खून जऽरी छुस च़्यकुन ज़ऽरी करान
भास प्रत्यक्ष कास खऽरी अस्य छि पापव
बलिमऽती।।०।।

चानि आशायि योत ब आसय नावोमेद नेरय न ज़ांह
या म्य वर दिम मोक्ष दामुक नत छुसय प्रारान
यतिय।।०।।

लोल बागस पोश फोलिमत्य वेरि चाने चा़र्य चा़र्य
शेरि लागय भाव कोसल शोलवनि कारे पती।।०।।

क्याह वनव अस्य मन्दछेमऽत्य चन्द छ्यनि सौदा करान

कर दया वञ वुछ म तथ कुन शर्मि सऽत्य अस्य
गलिमती।।०।।

चऽन्य ग्वण व्यस्तारनुक ताकत अनि कुस कस बनिय
छुय च़्य जय जय श्याम सोन्दरी जाम शूमान छिय
छतिय।।०।।

ज्ञान दाता मोक्ष दाता छख ज़गथ माता च छख
ही भवऽनी कर म्य वऽणी स्यद्ध मोखस दिम
सरस्वती।।०।।

पज़ि मन युस भख्त्य चऽनी करि निष्कल रात दिन
क्या छु संशय तसन्दि बापथ मोक्ष दामकि बर
वथिव।।०।।

च्यऽन्य ग्वण छुस बो व्यच़ारान पन ओमकि खारान
ब छुस
अबसनऽकि वर दोन कुनुय कर नत छु आछुर कऽत्य
कती।।०।।

सर्वव्यापक छख च़्वपऽरी अस्य छि चऽरी क्या वुछव
वन च़्य रोस्त कुस बोज़ि ज़ऽरी हाव मोख प्यठ
परबती।।०।।

कर्महीनन धर्महीनन कर्त्तव्यन सान्यन म वुछ
डाल स्योद अथ कर्म लान्यन प्रक्रमस चऽनिन
खतिय।।०।।

वीलज़ऽरी बोज़ दासस रोज़ सन्तुष्ट सर्वदा
छुय च़्य रोशन छुस ब तोषण च़ऽय म्य बखचुम
थऽज़ गती।।०।।

—०—

दासय दया म्य करतम, छखय निर्विकार दीवी।
चरणन तल म्य वरतम, करतम उदार दीवी।।

छखय सृष्टि-स्थिति कर्त्ता, भक्त्यन च़ पान भर्त्ता
विश्वरूप ही अकर्त्ता, छखय ॐकार दीवी।।०।।

सन्तुष्ट न्यथ म्य आसुम, मंज़ ध्यानसय म्य भासुम
च़्यथ शायि च़य विकासुम, दिमि सत्विच़ार
दीवी।।०।।

त्र्यन कारण च़ शक्ती, दिमि म्य पनञ भक्ती
बनिहे म्य यूग मुक्ती, च़ल्यम अन्धकार दीवी।।०।।

योगीश्वरन च़ भासान, प्रथ शायि च़य विकासान
यिम सोक्त दिल छि आसान, तिमहय छिय हुशार
दीवी।०।

च़य छख बन्धु-भ्राता, च़य छख पिता त माता
च़य छख गुरु त दाता, बोज़तम म्य ज़ार दीवी।।०।।

दिम स्मरण म्य अन्तर्, भासतम अन्दर त न्यबर्
सन्तापकुय छु म्य ज़र, ऐ च़्यथ स्फार दीवी।।०।।

हा दास! गछ च़ अर्पण, शुद्ध कर मन दर्पण
आनन्द बनिय विलक्षण, साक्षात्कार दीवी।

—o—

मऽज्य शारिकाय कर दया वर दया ही भवानी।
कर दयायि हंज दृष्टि सोय छम बऽड मेहरबानी।।

अस्य हय आमत्य च़्य निश योर कर्म-खुर्य भावऽनी।
मतय वुछत कर्मस कुन अस्य छि सऽरिय पशेमऽनी।।

कोत तान्य रोजि युन त गछन कोत तान्य रोज़ि क्रेशुन वदुन।
तार दिवान सारिनय छख असि ति रोज़ तारऽनी।।

ओश वसान दारि-दारे मऽज्य भवऽज हावि दर्शुन।
केंहनय छुय तगान बोजुन केंहनय छुस ब ज़ानऽनी।।

नखि छखय डखि छखय च़य च़्य सिवा कांहनय म्योनुय।
दोह त रात चोनुय फिरान अख सदा यि रूहानी।।

कुपुत्र छि माजि आसान, मऽज्य छ न ज़ाँह ति रोशान।
अस्य मंगान चऽनिय दया ज़गतच राजि रऽनी।।

अष्टादशभुजा छख ज़गतस बऽगरऽनी।
अस्य हय आमत्य छि डेडि तल अनुग्रह छिय मंगऽनी।।

पाप-शाप कास्तम च्रय वालतम भाऽर्य पापऽञ।
गीर कोरहस ब पापव केंह्नय छुम न तगऽनी।।

दास आव चोन दरबार दारि ओश छुम वसऽनी।
कन थव बोज़ फरियाद नाद छुसय दिवऽनी।।

लोकच्चारस मशिथ गोम बुजरस छुस स्वरान दय।
काँह गाफिला न म्य हयुव क्रेंजिलि पाञ सारऽनी।।

भक्तिस दर्शुन हाव सन्मुख रोज़ि ज़गतस।
लोल चानि दोह तय राथ नाल छुसय दिवऽनी।।

बूजमुत छ़ हलि मुश्किल वन्य तवय अस्य आयि
योर।
अख रछ़ा करत वञ गौर हिमाचल राजिऽरानी।।

दास छुस दर इन्तिज़ार भवसागरस दिमि तार।
ल्यम्बि मंज़ पम्पोश खार बोज़तय च म्यञ ज़ऽरी।।

—o—

## बंगला भजन

## ( मिश्र मल्लार-एकताल )

श्यामा मा कि आमार कालो रे। कालरूपा दिगम्बरी
हृदिपद्म करे आलो रे।।
लोके बोले काली क़ालो, आमार मन तो बोले ना कालो
रे।।

कखनो श्वेत कखनो पीत कखनो नील लोहित रे,

(आमि) आगे नाहि जानि, केमन जननी, भाबिये जनम गे लो रे,

कखनो पुरुष, कखनो प्रकृति, कखनो शून्यरूपा रे,
(मायेर) ए भाव भाबिये 'कमलाकान्त' सहजे पागल होलो रे,

—o—

## (सिन्धुखमाज-झपताल)

मजलो आमार मन-भ्रमरा श्यामापद-नील-कमले।
(श्यामपद-नील-कमले, कालीपद-नील-कमले)
जतो विषय-मधु तुच्छ होलो कामादि कुसुम सकले।।

चरण कालो, भ्रमर कालो, कालोय कालो मिशे गेलो,
पंचतत्त्व प्रधान मत्त रंग देखे भंग दिले।।

'कमलाकान्त' मने, आशापूर्ण एतो दिने।।
(ताय) सुख दुख समान हालो आनन्द-सागर उथले।।

—o—

## (भैरवी-एकताल)

मा त्वं हि तारा, तुमि त्रिगुण धरा परात्परा।
आमि जानि जो ओ दीन दयामयी, तुमि दुर्गमेते दुखहरा।।

तुमि जले तुमि स्थले, तुमि आद्यमूले गो मा,
आछो सर्वघटे अक्षपुटे, साकार आकार निराकारा।।

तुमि संध्या, तुमि गायत्री, तुमि जगद्धात्री, गो मा,
( तुमि ) अकुलेर त्राणकर्त्री, सदा शिवेर मनोहरा।।

## ( मिश्र सिंधु-झपताल )

सदानन्दमयी काली, महाकालेर मनोमोहिनी।
( तुमि ) आपनि नाचो, आपनि गाओ मा आपनि दाओ मा करतालि।।

आदिभूता सनातनी शून्यरूपा शशि-भाली।
ब्रह्माण्ड लो ना जखन, मुण्डमाला कोथा पेलि।।

सबे मात्र तुमि यंत्री, आमरा तोमार तन्त्रे चलि।
( तुमि ) जेमनि नाचाओ तेमनि नाचि, जेमनि बोलाओ तेमनि बोलि।।

अशान्त 'कमलाकान्त' दिये बोले मा गालागालि।
( एबार ) सर्वनाशी धरे असि धर्माधर्म दुटि खेलि।।

—o—

## श्रीरामनामसंकीर्तनम्

### प्रणामः

श्रीनाथे जानकीनाथे अभेदः परमात्मनि।
तथापि मम सर्वस्वः रामः कमललोचनः।।

ॐ श्रीरामचन्द्राय नमः।।

### स्तवः

वर्णानामर्थसंघानां रसानां छन्दसामपि।
मंगलानां च कर्तारौ वन्दे वाणीविनायकौ।।१।।

भवानीशंकरौ वन्दे श्रद्धाविश्वासरूपिणौ।
याभ्यां विना न पश्यन्ति सिद्धाः स्वान्तः
स्थमीश्वरम्।।२।।

वन्दे बोधमयं नित्यं गुरुं शंकररूपिणम्।
यमाश्रितो हि वक्रोऽपि चन्द्रः सर्वत्र वन्द्यते।।३।।

सीतारामगुणग्राम-पुण्यारण्यविहारिणौ।
वन्दे विशुद्धविज्ञानौ कवीश्वरकपीश्वरौ।।४।।

उद्भवस्थितिसंहारकारिणीं क्लेशहारिणीम्।
सर्वश्रेयस्करीं सीतां नतोऽहं रामवल्लभाम्।।५।।

यन्मायावशवर्ति विश्वमखिलं ब्रह्मादिदेवासुराः
यत्सत्त्वादमृषैव भाति सकलं रज्जौ यथाहेर्भ्रमः।
यत्पादः प्लवमेव भाति हि भवाम्भोधेस्तितीर्षावताम्
वन्देऽहं तमशेषकारणपरं रामाख्यमीशं हरिम्।।६।।

प्रसन्नतां या न गताभिषेकत
स्तथा न मम्लौ वनवासदुःखतः।
मुखाम्बुजश्री रघुनन्दनस्य मे
सदास्तु सा मञ्जुमंगलप्रदा।।७।।

नीलाम्बुजश्यामलकोमलांगं
सीतासमारोपितवामभागम्।
पाणौ महासायकचारुचापं
नमामि रामं रघुवंशनाथम्।।८।।

मूलं धर्मतरोर्विवेकजलधेः पूर्णेन्दुमानन्ददम्
वैराग्याम्बुजभास्करं त्वघहरं ध्वान्तापहं तापहम्।

मोहाम्भोधर पुञ्जपाटनविधौ खे संभवं शंकरम्
वन्दे ब्रह्मकुले कलंकशमनं श्रीरामभूपप्रियम्।।९।।

सान्द्रानन्दपयोदसौभगतनुं पीताम्बरं सुन्दरम्
पाणौ बाणशरासनं कटिलसत् तूणीरभारं वरम्।
राजीवायतलोचनं धृतजटा जूटेन संशोभितम्
सीतालक्ष्मणसंयुतं पथिगतं रामाभिरामं भजे।।१०।।

कुन्देन्दीवरसुंदरावतिबलौ विज्ञानधामावुभौ
शोभाढ्यौ वरधन्विनौ श्रुतिनुतौ गोविप्रवृन्दप्रियौ।
मायामानुषरूपिणौ रघुवरौ सद्धर्मवन्तौ हि तौ
सीतान्वेषणतत्परौ पथिगतौ भक्तिप्रदौ तौ हि
नः।।११।।

ब्रह्माम्भोधिसमुद्भवं कलिमलप्रध्वंसनं चाव्ययम्
श्रीमच्छंभुमुखेन्दुसुन्दरवरे संशोभितं सर्वदा।
संसारामयभेषजं सुमधुरं श्रीजानकीजीवनम्
धन्यास्ते कृतिनः पिबन्ति सततं
श्रीरामनामामृतम्।।१२।।

शान्तं शाश्वतमप्रमेयमनघं निर्वाणशान्तिप्रदं
ब्रह्माशम्भुफणीन्द्रसेव्यमनिशं वेदान्तवेद्यं विभुम्।
रामाख्यं जगदीश्वरं सुरगुरुं मायामनुष्यं हरिम्
वन्देऽहं करुणाकरं रघुवरं भूपालचूडामणिम्।।१३।।

केकिकण्ठाभनीलं सुरवरविलसद्विप्रपादाब्जचिह्नम्
शोभाढ्यं पीतवस्त्रं सरसिजनयनं सर्वदा सुप्रसन्नम्।
पाणौ नाराचचापं कपिनिकरयुतं बन्धुना सेव्यमानम्
नौमीढ्यं जानकीशं रघुवरमनिशं

पुष्पकारूढरामम्।।१४।।

आर्तानामार्तिहन्तारं भीतानां भयनाशनम्।
द्विषतां कालदण्डं तं रामचन्द्रं नमाम्यहम्।।१५।।

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम्।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि।।१६।।

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पक आसने मणिमये वीरासने संस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनीन्द्रैः परम्
व्याख्यातं भरतादिभिः परिवृतं रामं भजे
श्यामलम्।।१७।।

## प्रार्थना

नान्या स्पृहा रघुपते हृदयेऽस्मदीये
सत्यं वदामि च भवानखिलान्तरात्मा।
भक्तिं प्रयच्छ रघुपुङ्गव निर्भरां मे
कामादिदोषरहितं कुरु मानसं च।।

## संकीर्तनम्

ॐ श्रीसीता-लक्ष्मण-भरत-शत्रुघ्न-हनुमत्-समेत
श्रीरामचन्द्रपरब्रह्मणे नमः

# श्रीनामरामायणम्

## बालकाण्डम्

| | | |
|---|---|---|
| १. | शुद्धब्रह्मपरात्पर | राम |
| २. | कालात्मकपरमेश्वर | राम |
| ३. | शेषतल्पसुखनिद्रित | राम |
| ४. | ब्रह्माद्यमरप्रार्थित | राम |
| ५. | चण्डकिरणकुलमण्डन | राम |
| ६. | श्रीमद्दशरथनन्दन | राम |
| ७. | कौशल्यासुखवर्द्धन | राम |
| ८. | विश्वामित्रप्रियधन | राम |
| ९. | घोरताटकाघातक | राम |
| १०. | मारीचादिनिपातक | राम |
| ११. | कौशिकमखसंरक्षक | राम |
| १२. | श्रीमद् अहल्योद्धारक | राम |
| १३. | गौतममुनिसंपूजित | राम |
| १४. | सुरमुनिवरगणसंस्तुत | राम |
| १५. | नाविकधावितमृदुपद | राम |
| १६. | मिथिलापुरजनमोहक | राम |
| १७. | विदेहमानसरञ्जक | राम |
| १८. | त्र्यम्बककार्मुकभञ्जक | राम |
| १९. | सीतार्पितवरमालिक | राम |

२०. कृतवैवाहिककौतुक राम

२१. भार्गवदर्पविनाशक राम

२२. श्रीमद् अयोध्यापालक राम

## अयोध्याकाण्डम्

२३. अगणितगुणगणभूषित राम

२४. अवनीतनयाकामित राम

२५. राकाचन्द्रसमानन राम

२६. पितृवाक्याश्रितकानन राम

२७. प्रियगुहविनिवेदितपद राम

२८. तत्क्षालितनिजमृदुपद राम

२९. भरद्वाजमुखानन्दक राम

३०. चित्रकूटाद्रिनिकेतन राम

३१. दशरथसन्ततचिन्तित राम

३२. कैकेयीतनयार्थित राम

३३. विरचितनिजपितृकर्मक राम

३४. भरतार्पितनिजपादुक राम

## अरण्यकाण्डम्

३५. दण्डकवनजनपावन राम

३६. दुष्टविराधविनाशक राम

३७. शरभंगसुतीक्ष्णार्चित राम

३८. अगस्त्यानुग्रहवर्धित राम

| | | |
|---|---|---|
| ३९. | गृध्राधिपसंसेवित | राम |
| ४०. | पंचवटीतटसुस्थित | राम |
| ४१. | शूर्पणखार्तिविधायक | राम |
| ४२. | खरदूषणमुखसूदक | राम |
| ४३. | सीताप्रियहरिणानुग | राम |
| ४४. | मारीचार्तिकृताशुग | राम |
| ४५. | विनष्टसीतान्वेषक | राम |
| ४६. | गृध्राधिपगतिदायक | राम |
| ४७. | शबरीदत्तफलाशन | राम |
| ४८. | कबन्धबाहुच्छेदन | राम |

## किष्किन्धाकाण्डम्

| | | |
|---|---|---|
| ४९. | हनुमत्सेवितनिजपद | राम |
| ५०. | नतसुग्रीवाभीष्टद | राम |
| ५१. | गर्वितबालिसंहारक | राम |
| ५२. | वानरदूतप्रेषक | राम |
| ५३. | हितकरलक्ष्मणसंयुत | राम |

## सुन्दरकाण्डम्

| | | |
|---|---|---|
| ५४. | कपिवरसंततसंस्मृत | राम |
| ५५. | तद्गतिविघ्नध्वंसक | राम |
| ५६. | सीताप्राणाधारक | राम |
| ५७. | दुष्टदशाननदूषित | राम |

